# ॥ एकदंतगणेशस्तोत्रम् ॥

श्रीगणेशाय नमः ।
मदासुरं सुशान्तं वै दृष्ट्वा विष्णुमुखाः सुराः ।
भृग्वादयश्च मुनय एकदन्तं समाययुः ॥ १॥

प्रणम्य तं प्रपूज्यादौ पुनस्तं नेमुरादरात् ।
तुष्टुवुर्हर्षसंयुक्ता एकदन्तं गणेश्वरम् ॥ २॥

देवर्षय ऊचुः
सदात्मरूपं सकलादि-भूतममायिनं सोऽहमचिन्त्यबोधम् ।
अनादि-मध्यान्त-विहीनमेकं तमेकदन्तं शरणं व्रजामः ॥ ३॥

अनन्त-चिद्रूप-मयं गणेशं ह्यभेद-भेदादि-विहीनमाद्यम् ।
हृदि प्रकाशस्य धरं स्वधीस्थं तमेकदन्तं शरणं व्रजामः ॥ ४॥

विश्वादिभूतं हृदि योगिनां वै प्रत्यक्षरूपेण विभान्तमेकम् ।
सदा निरालम्ब-समाधिगम्यं तमेकदन्तं शरणं व्रजामः ॥ ५॥

स्वबिम्बभावेन विलासयुक्तं बिन्दुस्वरूपा रचिता स्वमाया ।
तस्यां स्ववीर्यं प्रददाति यो वै तमेकदन्तं शरणं व्रजामः ॥ ६॥

त्वदीय-वीर्येण समर्थभूता माया तया संरचितं च विश्वम् ।
नादात्मकं ह्यात्मतया प्रतीतं तमेकदन्तं शरणं व्रजामः ॥ ७॥

त्वदीय-सत्ताधरमेकदन्तं गणेशमेकं त्रयबोधितारम् ।
सेवन्त आपुस्तमजं त्रिसंस्थास्तमेकदन्तं शरणं व्रजामः ॥ ८॥

ततस्त्वया प्रेरित एव नादस्तेनेदमेवं रचितं जगद्वै ।
आनन्दरूपं समभावसंस्थं तमेकदन्तं शरणं व्रजामः ॥ ९॥

तदेव विश्वं कृपया तवैव सम्भूतमाद्यं तमसा विभातम् ।
अनेकरूपं ह्यजमेकभूतं तमेकदन्तं शरणं व्रजामः ॥ १०॥

ततस्त्वया प्रेरितमेव तेन सृष्टं सुसूक्ष्मं जगदेकसंस्थम् ।
सत्त्वात्मकं श्वेतमनन्तमाद्यं तमेकदन्तं शरणं व्रजामः ॥ ११॥

तदेव स्वप्नं तपसा गणेशं संसिद्धिरूपं विविधं वभूव ।

सदेकरूपं कृपया तवाऽपि तमेकदन्तं शरणं व्रजामः ॥ १२॥

सम्प्रेरितं तच्च त्वया हृदिस्थं तथा सुसृष्टं जगदंशरूपम् ।
तेनैव जाग्रन्मयमप्रमेयं तमेकदन्तं शरणं व्रजामः ॥ १३॥

जाग्रत्स्वरूपं रजसा विभातं विलोकितं तत्कृपया यदैव ।
तदा विभिन्नं भवदेकरूपं तमेकदन्तं शरणं व्रजामः ॥ १४॥

एवं च सृष्ट्वा प्रकृतिस्वभावात्तदन्तरे त्वं च विभासि नित्यम् ।
बुद्धिप्रदाता गणनाथ एकस्तमेकदन्तं शरणं व्रजामः ॥ १५॥

त्वदाज्ञया भान्ति ग्रहाश्च सर्वे नक्षत्ररूपाणि विभान्ति खे वै ।
आधारहीनानि त्वया धृतानि तमेकदन्तं शरणं व्रजामः ॥ १६॥

त्वदाज्ञया सृष्टिकरो विधाता त्वदाज्ञया पालक एव विष्णुः ।
त्वदाज्ञया संहरको हरोऽपि तमेकदन्तं शरणं व्रजामः ॥ १७॥

यदाज्ञया भूर्जलमध्यसंस्था यदाज्ञयाऽपः प्रवहन्ति नद्यः ।
सीमां सदा रक्षति वै समुद्रस्तमेकदन्तं शरणं व्रजामः ॥ १८॥

यदाज्ञया देवगणो दिविस्थो ददाति वै कर्मफलानि नित्यम् ।
यदाज्ञया शैलगणोऽचलो वै तमेकदन्तं शरणं व्रजामः ॥ १९॥

यदाज्ञया शेष इलाधरो वै यदाज्ञया मोहप्रदश्च कामः ।
यदाज्ञया कालधरोऽर्यमा च तमेकदन्तं शरणं व्रजामः ॥ २०॥

यदाज्ञया वाति विभाति वायुर्यदाज्ञयाऽग्निर्जठरादिसंस्थः ।
यदाज्ञया वै सचराऽचरं च तमेकदन्तं शरणं व्रजामः ॥ २१॥

सर्वान्तरे संस्थितमेकगूढं यदाज्ञया सर्वमिदं विभाति ।
अनन्तरूपं हृदि बोधकं वै तमेकदन्तं शरणं व्रजामः ॥ २२॥

यं योगिनो योगबलेन साध्यं कुर्वन्ति तं कः स्तवनेन स्तौति ।
अतः प्रणामेन सुसिद्धिदोऽस्तु तमेकदन्तं शरणं व्रजामः ॥ २३॥

गृत्समद उवाच
एवं स्तुत्वा च प्रह्लाद देवाः समुनयश्च वै ।
तूष्णीं भावं प्रपद्यैव ननृतुर्हर्षसंयुताः ॥ २४॥

स तानुवाच प्रीतात्मा ह्येकदन्तः स्तवेन वै ।
जगाद तान् महाभागान् देवर्षीन् भक्तवत्सलः ॥ २५॥

एकदन्त उवाच
प्रसन्नोऽस्मि च स्तोत्रेण सुराः सर्षिगणाः किल ।
वृणुध्वं वरदोऽहं वो दास्यामि मनसीप्सितम् ॥ २६॥

भवत्कृतं मदीयं वै स्तोत्रं प्रीतिप्रदं मम ।
भविष्यति न सन्देहः सर्वसिद्धिप्रदायकम् ॥ २७॥

यं यमिच्छति तं तं वै दास्यामि स्तोत्रपाठतः ।
पुत्र-पौत्रादिकं सर्वं लभते धन-धान्यकम् ॥ २८॥

गजाश्वादिकमत्यन्तं राज्यभोगं लभेद् ध्रुवम् ।
भुक्तिं मुक्तिं च योगं वै लभते शान्तिदायकम् ॥ २९॥

मारणोच्चाटनादीनि राज्यबन्धादिकं च यत् ।
पठतां शृण्वतां नृणां भवेच्च बन्धहीनता ॥ ३०॥

एकविंशतिवारं च श्लोकांश्चैवैकविंशतिम् ।
पठते नित्यमेवं च दिनानि त्वेकविंशतिम् ॥ ३१॥

न तस्य दुर्लभं किंचित् त्रिषु लोकेषु वै भवेत् ।
असाध्यं साधयेन् मर्त्यः सर्वत्र विजयी भवेत् ॥ ३२॥

नित्यं यः पठते स्तोत्रं ब्रह्मभूतः स वै नरः ।
तस्य दर्शनतः सर्वे देवाः पूता भवन्ति वै ॥ ३३॥

एवं तस्य वचः श्रुत्वा प्रहृष्टा देवतर्षयः ।
ऊचुः करपुटाः सर्वे भक्तियुक्ता गजाननम् ॥ ३४॥

॥ इति श्री एकदन्तस्तोत्रं सम्पूर्णम् ॥